॥ श्रीवेङ्कटेशकवचस्तोत्रम् ॥
आग्नेयपुराणे
अस्य श्रीवेङ्कटेशकवचस्तोत्रमहामन्त्रस्य ब्रह्मा ऋषिः
गायत्री छन्दः श्रीवेङ्कटेश्वरो देवता ।
ॐ बीजं ह्रीं शक्तिः क्लीं कीलकम् । इष्टार्थे विनियोगः ।
ध्यानम्
ध्यायेद्वेङ्कटनायकं करयुगे शङ्खं च चक्रं मुदा [गदा]
चान्ये [चाद्य] पाणियुगे वरं कटितटे विभ्राणमर्कच्छविम् ।
देवं देवशिखामणिं श्रियमथो वक्षोदधानं हरिं
भूषाजालमनेकरत्नखचितं दिव्यं किरीटाङ्गदम् ॥ १॥

वराहः पातु मे शीर्षं केशान् श्रीवेंङ्कटेश्वरः ।
शिखामिळापतिः कर्णौ ललाटं दिव्यविग्रहः ॥ २॥

नेत्रे युगान्तस्थायी मे कपोले कनकाम्बरः ।
नासिकामिन्दिरानाथो वक्त्रं ब्रह्मादिवन्दितः ॥ ३॥

चुबुकं कामदः कण्ठमगस्त्याभीष्टदायकः ।
अंसौ कंसान्तकः पातु कमठस्स्तनमण्डले ॥ ४॥

हृत्पद्मं पात्वदीनात्मा कुक्षिं कालाम्बरद्युतिः ।
कटिं कोलवपुः पातु गुह्यं कमलकोशभृत् ॥ ५॥

नाभिं पद्मापतिः पातु करौ कल्मषनाशनः ।
अङ्गुलीर्हैमशैलेन्द्रो नखरानम्बरद्युतिः ॥ ६॥

ऊरू तुम्बुरुगानज्ञो जानुनी शङ्खचक्रभृत् ।
पादौ पद्मेक्षणः पातु गुल्फौ चाकाशगाङ्गदः ॥ ७॥

दिशो दिक्पालवन्द्याङ्घ्रिर्भार्यां पाण्डवतीर्थगः ।
अव्यात्पुत्रान् श्रीनिवासः सर्वकार्याणि गोत्रराट् ॥ ८॥

वेङ्कटेशः सदा पातु मद्भाग्यं देवपूजितः ।
कुमारधारिकावासो भक्ताभीष्टाभयप्रदः ॥ ९॥

शङ्खाभयप्रदाता तु शम्भुसेवितपादुकः ।
वाञ्छितं वरदो दद्याद्वेङ्कटाद्रिशिखामणिः ॥ १०॥

श्वेतवाराहरूपोऽयं दिनरात्रिस्वरूपवान् ।
रक्षेन्मां कमलनाथः सर्वदा पातु वामनः ॥ ११॥

श्रीनिवासस्य कवचं त्रिसन्ध्यं भक्तिमान् पठेत् ।
तस्मिन् श्रीवेङ्कटाधीशः प्रसन्नो भवति ध्रुवम् ॥ १२॥

आपत्काले जपेद्यस्तु शान्तिमायात्युपद्रवात् ।
रोगाः प्रशमनं यान्ति त्रिर्जपेद्धानुवासरे ॥ १३॥

सर्वसिद्धिमवाप्नोति विष्णुसायुज्यमाप्नुयात् ।

॥ इति श्रीमदाग्नेयपुराणे वेङ्कटाचलमाहात्म्ये वसिष्टनारदसंवादे वेङ्कटेशदिव्यकवचस्तोत्रं नाम पञ्चदशोऽध्यायः ॥